उभयम् । चष्टे । अन्तः । बृहस्पतिः । तरः । आपः । च । गृध्रः ॥७॥
एव । महः । तुविऽजातः । तुविष्मान् । बृहस्पतिः । वृषभः । धायि ।
देवः । सः । नः । स्तुतः । वीरऽवत् । धातु । गोऽमत् । विद्याम । इषम् ।
वृजनम् । जीरऽदानुम् ॥८॥

1. 191.

कङ्कतः । न । कङ्कतः । अथो इति । सतीनऽकङ्कतः । द्वौ । इति ।
प्लुषी इति । इति । नि । अदृष्टाः । अलिप्सत ॥१॥ अदृष्टान् । हन्ति ।
आऽयती । अथो इति । हन्ति । पराऽयती । अथो इति । अवऽघ्नती ।
हन्ति । अथो इति । पिनष्टि । पिंषती ॥२॥ शरासः । कुशरासः ।
दर्भासः । सैर्याः । उत । मौञ्जाः । अदृष्टाः । वैरिणाः । सर्वे । साकम् ।
नि । अलिप्सत ॥३॥ नि । गावः । गोऽस्थे । असदन् । नि । मृगासः ।
अविक्षत । नि । केतवः । जनानाम् । नि । अदृष्टाः । अलिप्सत ॥४॥
एते । ऊँ इति । त्ये । प्रति । अदृश्रन् । प्रऽदोषम् । तस्कराःऽइव ।
अदृष्टाः । विश्वऽदृष्टाः । प्रतिऽबुद्धाः । अभूतन ॥५॥ द्यौः । वः । पिता ।
पृथिवी । माता । सोमः । भ्राता । अदितिः । स्वसा । अदृष्टाः । विश्व-
ऽदृष्टाः । तिष्ठत । इलयत । सु । कम् ॥६॥ ये । अंस्याः । ये । अङ्ग्याः ।
सूचीकाः । ये । प्रऽकङ्कताः । अदृष्टाः । किम् । चन । इह । वः । सर्वे ।
साकम् । नि । जस्यत ॥७॥ उत् । पुरस्तात् । सूर्यः । एति । विश्वऽदृष्टः ।
अदृष्टऽहा । अदृष्टान् । सर्वान् । जम्भयन् । सर्वाः । च ।
यातुऽधान्यः ॥८॥ उत् । अपप्तत् । असौ । सूर्यः । पुरु ।
विश्वानि । जूर्वन् । आदित्यः । पर्वतेभ्यः । विश्वऽदृष्टः । अदृष्टऽहा ॥९॥
सूर्ये । विषम् । आ । सजामि । दृतिम् । सुराऽवतः । गृहे । सः । चित् ।

नु । न । मराति । नो इति । वयम् । मराम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१०॥ इयत्तिका । शकुन्तिका । सका । जघास । ते । विषम् । सो इति । चित् । नु । न । मराति । नो इति । वयम् । मराम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥११॥ त्रिः । सप्त । विष्पुलिङ्गकाः । विषस्य । पुष्यम् । अक्षन् । ताः । चित् । नु । न । मरन्ति । नो इति । वयम् । मराम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१२॥ नवानाम् । नवतीनाम् । विषस्य । रोपुषीणाम् । सर्वासाम् । अग्रभम् । नाम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१३॥ त्रिः । सप्त । मयूर्यः । सप्त । स्वसारः । अग्रुवः । ताः । ते । विषम् । वि । जभ्रिरे । उदकम् । कुम्भिनीःऽइव ॥१४॥ इयत्तकः । कुषुम्भकः । तकम् । भिनद्मि । अश्मना । ततः । विषम् । प्र । ववृते । पराचीः । अनु । सम्ऽवतः ॥१५॥ कुषुम्भकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्तमानकः । वृश्चिकस्य । अरसम् । विषम् । अरसम् । वृश्चिक । ते । विषम् ॥१६॥